# ॥ विश्वाकर्मोपनिषत् ॥

अथ विश्वाकर्मोपनिषत् ।

ज्योतिर्मयं शान्तमयं प्रदीप्तं, विश्वात्मकं विश्वजितन्निरीशम् ।
अद्यन्तशून्यं सकलैकनाथं, श्रीविश्वकर्माणमहं नमामि ॥

ॐ विश्वकर्मा दिशां पतिः स नः पशून्पातु सोऽस्मान्पातु तस्मै नमः ।
प्रजापतिरुद्रो वरुणोऽग्निर्दिशाम्पतिः स नः
पशून्पातु सोऽस्मान्पातु तस्मै नमः ॥

अथ पुरुषो ह वै विश्वकर्मणो कामयत प्रजाः सृजेयेति ।
विश्वकर्मणः प्राणो जायते मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥

विश्वकर्मणो ब्रह्मा जायते । विश्वकर्मणो रुद्रो जायते ।
विश्वकर्मणो नारायणो जायते । विश्वकर्मणः प्रजापतयः प्रजायन्ते ।

विश्वकर्मणो द्वादशादित्या रुद्रा वसवः सर्वे देवताः सर्वे
ऋषयः सर्वाणि छन्दांसि सर्वाणि भूतानि वा समुत्पद्यन्ते ।
विश्वकर्मणि प्रवर्धन्ते । विश्वकर्मणि प्रलीयन्ते ।

ॐ अथ नित्यो देवो एको विश्वकर्मा । यो देवानां नामधारी
एक एव विश्वकर्मा । विराट विश्वकर्मा । स्वराड्विश्वकर्मा ।
सम्राड्विश्वकर्मा ।

अथ रुद्रो विश्वकर्मा । ब्रह्मा विश्वकर्मा । शिवश्च
विश्वकर्मा । विष्णुश्च विश्वकर्मा । शक्रश्च विश्वकर्मा ।
द्यावापृथिव्यौ च विश्वकर्मा । कालश्च विश्वकर्मा ।
दिशश्च विश्वकर्मा । दिक्चक्रश्च विश्वकर्मा । अग्निश्च विश्वकर्मा ।
ऊर्ध्वश्च विश्वकर्मा । अधश्च विश्वकर्मा । अवान्तरश्च विश्वकर्मा ।
अन्तर्बहिश्च विश्वकर्मा । विश्वकर्मणो निराकृतिः ।
विश्वकर्मण एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः ॥

शुद्धाद्वैतैको विश्वकर्मा, न द्वितीयोऽस्ति कश्चित् ।
य एवं वेद स विश्वकर्मारो भवति ॥

ॐ इत्यग्रे व्याहरेत् । नमेति पश्चात् । विश्वकर्मणेः इति उपरिष्ठात् ।
ॐ इत्येकाक्षरं नम इति द्वे अक्षरे विश्वकर्मण इति पञ्चाक्षराणि ॥ ॐ॥

विश्वकर्मण इति षडक्षराणि ।
ॐ नमो विश्वकर्मण इत्यष्टाक्षरं पदं ध्यायेति ।
अन प्रब्रवस्सर्व आयुरोत ।
विन्दते प्राजापत्यं रायस्पोषकं गौपत्यम् ॥

ततो अमृतत्त्वमश्नुते । इति एवं वेद ।

प्रत्यगानन्द ब्रह्म पुरुषं प्रणवस्वरूपम् ।
अकार, उकारो, मकार इति । तानेकधारममरत्तदेतद्गोमिति ।
यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥

ॐ नमो विश्वकर्मण इति ममोपासकः सायुज्ये गमिष्यति ।
तदिदं परं पुण्डरीकं विज्ञान धनम् ।
तस्मात् तदिदावन्मात्रं ब्रह्मण्यो विश्वकर्मोम् ।
सर्वभूतस्थमेकं विश्वकर्माणं कारणरूपं मकार
परविश्वब्रह्मोम् । पदं विष्टावाख्यमिति तेऽपि
विश्वकर्माख्योपनिषदम् । यो ह वै विश्वकर्मण्योपनिषदमधीते ।
सर्वेभ्यो पापेभ्यो विमुक्तो भवति । स सर्वेभ्यः विमुक्तः
सर्वान्कामानवाप्नोति । ब्रह्मत्वं च गच्छति । इत्युपनिषत् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥